हवे शिष्य चार प्रश्न कहे छे.

का देव- दुर्गतिः का अबोधिः केन वा उह्यते मरणं ॥
का देव-दुग्गई का, अबोहि केण व वुब्भई मरणं॥
कइ देवनी दुर्गति कइ अबोधि कया कारणे थाय मरण॥
केन अनंत पारं संसारं हिंडते जीवः ॥ ३८ ॥
केण अणंतं पारं, संसारं हिंमइ जीवो ॥ ३८ ॥
कयाकारणे अनंतकाल सुधी संसारमां भमे जीव ॥ ३८ ॥

भावार्थः-१. देवनी दुर्गति कइ समजवी? २. अबोधि ते शुं? ३. शा हेतुए करी वारंवार संसारमां मरवुं पडे? ४. कया कारणे करी अनंत काल सुधी संसारमां जीव रखडे? ॥ ३७ ॥

हवे पेहेला प्रश्ननो उत्तर कहे छे.

कंदर्पदेव किल्बिषा- भियोगा आसुरी च संमोहा ॥
कंदप्पदेव किब्बिस,-अभिओगा आसुरी अ संमोहा ॥
कंदर्प देवरूप वेडदेवरूप चाकर देवरूप दासरूप अने संमोह रूप ॥

ताः देवदुर्गतयः मरणे विराधिते भवति ॥ ३९ ॥

ता देवडुग्गईड, मरणं मिविराहिए हुंति ॥ ३७ ॥

ते देवनी दुर्गतिओ पांच मरण विराधे छते थाय छे ॥ ३९ ॥

भावार्थ.—संजम पालता थकां जे हास्य करवाना स्वभाववाला होय छे तेमने जे देवतानी गति मले छे ते कंदर्प (मश्करा सरखा) देवनी दुर्गति कहेवाय छे १. संजम पालता केवलि, श्रुत, संघ, चारित्र, धर्म आदिनी आशातना करनारने जे देवतानी गति मले छे ते किल्बिषिक (ढेड सरखा) देवनी दुर्गति कहेवाय छे २. संजम पालतां उच्चाटन आदि मन्त्रोने करनारनी जे देवगति थाय छे ते अभियोगिक (चाकर सरखा) देवनी गति कहेवाय छे ३. संजम पालता कोप करनारानी जे देवगति थाय छे, तेने आसुरी (दास सरखा) देवतानी गति कहेवाय छे ४. संजम पालता उन्मार्गनी देशना देवा प्रमुखे करी जे देवगति थाय छे ते समोहा नामनी देव दुर्गति कहेवाय छे ५. आ उपर बतावेली पांच देवता संबंधी दुर्गतिउ मरणना विराधनारने प-

ए थाय छे. ॥ ३ए ॥

हवे अबोधि शुं ? आ प्रकारनो जे बीजो प्रश्न तेनो उत्तर कहे छे.

मिथ्या- दर्शन रक्ताः सनिदानाः कृष्णलेश्यावगाढाः ॥
मिछा- दंसणरत्ता, सनियाणा किन्हलेसमोगाढा ॥
मिथ्या दर्शनमां रतिवाला नियाणा सहित कृष्णलेश्यावाला ॥
इह ये म्रियंते जीवाः तेषां दुर्लभा भवेद्बोधिः॥४०॥
इह जे मरंति जीवा, तेसिं दुल्लहा भवे बोही ॥४०॥
आ संसारमां जे मरे जीवो तेओने दुर्लभ होय बोधि बीज ॥४०॥

भावार्थः—जे जीवो आ संसारमां मिथ्या दर्शनमां रतिवाला थइ, तेमज नियाणुं करी, तेमज कृष्णलेश्यानां अध्यवसायमां वर्त्ताथका मरे छे, तेउने बीजा भवोमां बोधिबीज (सम्यक्त्व) दुःखे मले छे. ॥ ४० ॥

हवे मनुष्य सुलभ बोधिपणुं केवा प्रकारे पामे छे ते बतावे छे.

सम्यग्दर्शनरक्ताः अनिदानाः शुक्लेश्यामवगाढाः ॥

सम्मद्दंसणरत्ता, अनियाणा सुक्कलेसमोगाढा ॥

सम्यग्दर्शनमां रतिवाळा नियाणा रहित शुक्लेश्यावाळा ॥

इह ये म्रियंते जीवाः तेषां सुलभा भवेद् बोधिः ॥ ४१ ॥

इह जेमरंति जीवा, तेसिं सुलहा नवे बोही ॥ ४१ ॥

आ संसारमां जे मरे जीवो तेओने सुलभ थाय बोधि बीज, ॥ ४१ ॥

ज्ञावार्थ.—जे प्रकारे जिनेश्वर ज्ञगवाने नव तत्वनुं स्वरूप कह्युं वे ते प्रकारे श्रद्धान करवा रूप सम्यग्दर्शनमां रतिवाला तेमज नियाणाए रहित तेमज शुक्लेश्याना अध्यवसायमा वर्त्तता एहवा जे जीवो आ संसारमा मरे वे तेउने बोधिबीज (सम्यक्त्व) सुखे प्राप्त थाय वे ॥ ४१ ॥

त्रीजा प्रश्ननो उत्तर घणो विस्तारवालो होवाथी सूचिकटाह न्याये करी चोथो प्रश्न के अनंतकाल सुधी जीव संसारमा शाथी ज्रमे ? तेनो उत्तर बतावे वे

ये पुनः गुरु- प्रत्यनीकाः बहुमोहाः सशवलाः कुशीलाश्च ॥

जे पुण गुरु-पडिणीआ, बहुमोहा ससबला कुसीला य ॥

जे वली गुरुना शत्रुभूत घणा मोहवाला दूषण सहित अने कुशील ॥

असमाधिना म्रियंते ते भवंति अनंत- संसारिणः ॥ ४२ ॥

असमाहिणा मरंति, ते हुंति अणंत-संसारी ॥ ४२ ॥

असमाधिए मरे छे ते होय छे अनंत संसारी ॥ ४२ ॥

भावार्थः-जे जीवो गुरुना अवगुण बोलवाए करी गुरुना शत्रुभूत थतां तीव्र मोहराजानी विडंबनामां वर्त्तता छता, तेमज हस्तकर्मादिक एकवीस शास्त्रमां कहेला सबल दोषे करी सहित तेमज दुष्ट आचारने धारण करता छता चित्तना अस्वस्थपणाए करी मरण पामे छे, ते अनंत संसारी थाय छे. ॥ ४२ ॥

हवे अनंत संसारीना प्रतिपक्षभूत थोडा संसारवाला केवी रीते थाय छे, बतावे छे.

जिनवचने अनुरक्ताः गुरुवचनं ये कुर्वंति भावेन ॥
जिणवयणे अणुरत्ता, गुरुवयणं जे करंति नावेणं ॥
जिन वचनमां रागवाला गुरुनु वचन जे करे छे भावे करीने ॥
अशबला असंक्लिष्टाः ते भवति परीत्तसंसारिणः ॥ ४३ ॥
असबल असंकिलिठा, ते हुंति परित्तससारी ॥ ४३ ॥
दूषणरहित संक्लेशरहित तेओ होय छे थोडा संसारवाला ॥ ४३ ॥

नावार्थ.—उत्सर्ग अपवाद मार्गरूप जिन वचनने विषे अनुराग करता बता, गुरुनुं वचन जेठ अति आदर लावी करे वे अने शवलना (मेला चरित्रना) एक वीश दोषे करो रहित तेमज खरावपरिणामे रहित होय वे ते थोमा काल ससारमां रहेनारा होय बे. ॥ ४३ ॥

हवे बीजो प्रश्न के संसारमां वारंवार शा थकी मरवुं पमे? तेनो उत्तर अठी गाथाए करी कहे वे.

वालमरणानि बहुशः बहुकानि अकामुकानि मरणानि ॥
वालमरणाणि बहुसो, बहुआणि अकामगाणि मरणाणि ॥
वालमरणो घणीवार घणीवार इच्छारहित मरणो ॥

मरिष्यंति ते वराकाः ये जिनवचनं न जानंति ॥ ४४ ॥
मरिहंति ते वराया, जे जिणवयणं न याणंति ॥ ४४ ॥
मरशे ते गरीबडा जे जिनवचनने नथी जाणता ॥ ४४ ॥

शस्त्रग्रहणं विषभक्षणं च ज्वलनं च जलप्रवेशश्च ॥
सत्थग्गहणं विसभ,—क्खणं च जलणं च जलप्पवेसो अ ॥
शस्त्रनुं ग्रहण विष भक्षण बली मरवुं बुडी मरवुं ॥

अनाचारभांडसेविनः जन्ममरणानुबंधीनि ॥ ४५ ॥
अणायारभंडसेवी, जंमणमरणाणुबंधीणि ॥ ४५ ॥
अनाचार अधिक उपगरण सेवनार जन्ममरणनी परंपरा वधारनार ॥ ४५ ॥

उर्ध्वाधस्तिर्यग्लोके च स्थितानि जीवेन बालमरणानि ॥
उड्ढमहेतिरियंमिवि, मयाणि जीवेण बालमरणाणि ॥
उचा नीचा तीर्च्छा (लोकमां) कर्यां जीवे बालमरणो ॥
दर्शनज्ञानसहगत' पंडितमरण अनुमरिष्ये ॥ ४८ ॥
दंसणनाणसहगऊ, पंमियमरणं अणुमरिस्सं ॥ ४६ ॥
दर्शनज्ञाने सहित छतो पंडित मरणे मरीश ॥ ४६ ॥

भावार्थः—जे जीवो जिनेश्वर भगवाननुं वचन रूडी रीते जाणता नथी ते रांकजीवो घणा बालमरणो अने घणी वखत इच्छारहितपणे मरणो करशे ४४

ते बालमरणो कया ते बतावे छे

तीर्थना स्थलोमा जइ संसारनां सुख पामवा माटे अज्ञानपणाथकी जे शस्त्रे करी मरवुं, तेमज नियाणा सहित अगर कोइ संसारिक पदार्थनी वांछाए अथवा क्रोधादिकना वश थइ मरवुं, तेमज अग्निमा पुद्गलिक सुखनी इच्छाए करी सुवर्णनंदी सोनीनी पेठे बलिमरवुं अगर पांच धुणी आदिके करी अग्नि-

नो ताप सहन करी मरवुं. तेमज तीर्थना स्थलोमां जइ देवतानी अगर राजादिकनी ऋद्धि पामवा माटे बुडी मरवुं अथवा तो खरा शीयालामां पाणीमां प्रवेश करी स्नान करवारूप कष्टने सहन करी जे मरवुं.

तेमज पाखंडिना वेषो धारण करी लोकोने छेतरीने अगर जैनना साधुनो वेष छतां पण हास्यादिके करी जिनेश्वर भगवाने कहेला तत्वोनुं रहस्य पाम्या विनाज अनाचारो सेवी जे मरवुं ए उपर कहेलां बाल मरणो जन्म अने मरणनी परंपराने वधारनारां छे. आ प्रकारे विचारीने उत्तम मुनि महाराजा केवा मरणे मरवानुं चिंतवे ते बतावे छे. बालमरणो अनंत जन्म मरणने आपनारां छे एम समजी हवे हुं दर्शन अने ज्ञान गुण सहित छतो जेनुं स्वरूप प्रथम कह्युं छे तेवा पंडित मरणे करी मरीश. ॥ ४६ ॥

हवे गुरु अनशन करनारने बालमरणे मरवाथी संसारमां भोगववां पडतां दुःखोथकी भय बतावता छता पंडितमरणे मरवानो उपदेश करे छे.

उद्वेजनक जातिमरण नरकेषु वेदनाश्च ॥

उव्वेयणयं जाई,—मरणं नरएसु वेअणाउ अ ॥

उद्वेग करनार जन्म मरण अने नरकने विषे जे थएली वेदनाओ ॥

एतानि स्मरन् पंडितमरणेन म्रियस्व इदानीं ॥ ४७ ॥

एआणि संभरंतो, पंडियमरणं मरसु इण्हि ॥ ४३ ॥

ए संभालतो छतो पंडित मरणे करी मर हमणां ॥ ४७ ॥

भावार्थः—बालमरण करीने जे जे उद्वेग करनारा जन्ममरण पाम्यो ते तथा नरकने विषे जे जे अतिशय दुःख करनार वेदनाओ भोगवी, ते सर्व संभालतो थको हमणां सावधान थइ पंडितमरणे मर के जेथी उद्वेगकारी जन्ममरण अने नरक वेदनाओ न थाय. ॥ ४३ ॥

आवो उपदेश सांभलता छतां कदाचित् दुःख उत्पन्न थाय तो ते अवसरे जे मुनि महाराजा चिंतवे ते बतावे छे.

यदि उत्पद्यते दुःखं ततः(तस्मादुर्भविः)द्रष्टव्यः स्वभावतः नवरं ॥
जइ उपज्जइ डुःखं, तो दट्ठवो सहावउ नवरं ॥
जो उत्पन्न थाय दुःख तो तेनी उत्पत्ति जोवी स्वभावथकी विशेष ॥
किं किं मया न प्राप्तं संसारं संसरता ॥ ४८ ॥
किं किं मए न पत्तं, संसारं संसरंतेणं ॥ ४८ ॥
शुं शुं दुःख हुं नथी पाम्यो संसारमां भमतां छतां ॥ ४८ ॥

भावार्थः—जो डुःख उत्पन्न थाय तो मुनि महाराजाए रागद्वेषनी परिणतिनी मंदतारूप आत्मस्वभावमां रही जोया करवुं अने आवो विशेष विचार पण करवो के आ संसारमां भ्रमण करतां थकां में शुं शुं डुःख नथी भोगव्युं. प्रथम आवी रीतनां परवशपणे डुःखो अनंती वखत भोगव्यां, पण आत्मानुं कल्याण थयुं नहीं आ वखत स्ववशपणे ते भोगवी आत्मानुं कल्याण थतां छतां मनमां शा माटे खेद करे छे. ॥ ४८ ॥

प्रथम वेदनाने ज एकली सहन करी एम नहीं. संसारमां वर्त्ततां सर्व

पुद्गलो आहारपणे ग्रहण कर्या छतां पण, तृप्ति थइ नथी, ए प्रकारनी भावना करवा माटे कहे छे.

संसारचक्रवाले सर्वेपि च पुद्गला मया बहुशः ॥

संसारचक्कवाले, सव्वेवि य पुग्गला मए बहुसो ॥

संसार चक्रमां सर्वेपण वळी पुद्गलो में घणीवखत ॥

आहारिताश्च परिणामिताश्च न चाहं गतस्तृप्तिं ॥ ४९ ॥

आहारिआय परिणा,-मिआय न यहं गउ तत्ति ॥ ४९॥

खाधा तेमज परिणमाव्या नहीं वळी हु पाम्यो तृप्तिने ॥ ४९ ॥

भावार्थः—अनेक जन्मोमां भमता छतां चउद राजलोकमां रहेला सर्व पुद्गलो घणी वखत में आहारपणे ग्रहण कर्या, अने परिणमाव्या, पण हजु सुधी तृप्ति पाम्यो नहीं; तो हवे तृप्ति तेना प्रसंग थकी तो क्याथीज थवानी? माटे हे चेतन तारे पुद्गलिक भावोनी इच्छा करवी ते योग्य नथी. ॥ ४९ ॥

पुद्गलोने मेळववाना उद्यमथी अने तेना भोगथकी तृप्ति थती नथी ए-

म ग्रंथकार आगल गाथामां दृष्टांत आपीने दृढ करे छे.

तृणकाष्ठैरिवाग्निः लवणजलो वा नदीसहस्रैः ॥

तणकट्ठेहि–व–अग्गी, लवणजलो वा नईसहस्सेहिं ॥

तरणां लाकडांए करी जेम अग्नि अने लवण समुद्र जेम नदीना हजारे करी ॥

नैषः जीवः शक्यः तर्पयितुं कामभोगैः ॥ ५० ॥

न इमो जीवो सक्को, तप्पेउं कामभोगेहिं ॥ ५० ॥

नही आ जीव शक्य तृप्त करवाने कामभोगोए करी ॥ ५० ॥

भावार्थः–तरणां अने लाकडांए करी जेम अग्नि धरातो नथी अने हजारो गमे नदीउ आववाए करीने जेम लवणसमुद्र धरातो नथी तेम आ जीव पण कामभोगोए करी धरातो नथी. तेनो त्याग कर्या छतांज तृप्ति पामे माटे जेम बने तेम कामभोगनी तृप्ति करवाने इच्छनार माणसे कामभोगथकी अवश्य निवर्त्तवुं जोइए. ॥ ५० ॥

आहारनी अंदर आसक्तिवालां प्राणीउ केवां दुःख पामे छे ते बतावे छे.

आहारनिमित्तेन मत्स्या गच्छति सप्तमी पृथ्वी ॥
आहारनिमित्तेणं, मह्वा गह्वंति सत्तमीं पुढवीं ॥
आहारनी गृद्धिना कारणे करी (तदुलाया) मछो जाय छे सातमि पृथ्वीमां ॥
सचित्त आहारः न क्षमः मनसापि प्रार्थयितु ॥ ५१ ॥
सचित्तो आहारो, न खमो मणसावि पथ्येउं ॥ ५१ ॥
सचित्त आहार नहीं योग्य - मने करीने पण प्रार्थना करवाने ॥ ५१ ॥

भावार्थः—मोटा मछनी पापणमां रहेला पंचेंद्रिय जातिना तंदुलीया मछो हुं मोटोटो मछ होउ तो आ बधां माछलांमाथी एकेने मुखथकी नीकलवा दउं नहीं, एहवी रीते आहारनी आसक्तिथी हिंसा चिंतवतो छतो सातमि नरके जाय छे. आवुं समजी विचक्षणोए सचित्त आहारनी मनथकी पण प्रार्थना करवी योग्य नथी. ॥ ५१ ॥

हवे गुरुना उपदेशथकी विषयना विपाको जेमणे जाण्या छे एहवा मुनि महाराज जे चिंतवे ते बतावे छे

पूर्वकृतपरिकर्मः अनिदानः ऊहं मतिबुद्धिं ॥

पुव्विंकयपरिकम्मो, अनिआणो ऊहिऊण मइबुद्धिं ॥

प्रथम कर्यों छे अभ्यास जेणे नियाणा रहित विचारीने मति अने बुद्धिथी ॥

पश्चात् मलितकषायः सद्यः मरणं प्रतीच्छामि ॥ ५२ ॥

पच्छा मलिअकसाओ, सज्जो मरणं पडिच्छामि ॥ ५२ ॥

पछी नाश पमाड्यो छे कषाय जेणे जलदी मरण अंगीकार करुंछुं ॥ ५२ ॥

भावार्थः—जघन्यथी छ महिनानी मध्यमथी एक वरसनी अने उत्कृष्टथी बार वरसनी संलेखनानो अभ्यास जेमणे कर्यो छे अने नियाणाए करी रहित एहवो थयो छतो तेमज वर्त्तमान पदार्थमां थती मति अने आगामिकालमां पदार्थने जाणनार बुद्धि ते थकी कषाय प्रमुखनुं स्वरूप शुद्ध रीतिथी विचारीने पछी पोताना आत्मामां रहेला कषायो जेणे नाश कर्या छे एहवो छतो जलदी अनशन अंगीकार करुंछुं. ॥ ५२ ॥

हवे जे अवसर प्राप्त थया वगर अथवा अभ्यास कर्या विनाज अनशन

एकदम अंगीकार करे तेनी जे अवस्था थाय ते बतावे छे.

अकांडे अचिरभाविताः ते पुरुषाः मरणदेशकाले ॥

अकंडे चिरभाविय, ते पुरिसा मरणदेसकालंमि ॥

अकालमां लांबा कालना अभ्यास रहित ते पुरुषो मरणना अवसर विषे ॥

पूर्व-कृत-कर्म परिभावनया पश्चात् प्रतिपतन्ति ॥ ५३ ॥

पुव्व-कय-कम्मपरिभा,-वणाइ पच्छा परिवडंति ॥ ५३ ॥

पूर्वे करेला कर्मना प्रभावे करी पछी पडे छे ॥ ५३ ॥

भावार्थः—आउखानो अंत आव्या वगर अकालेज आउखानो अंत आव्या छता पण लांबा काल सुधी संलेखनानो अभ्यास कर्या विना अनशनने करनारा ते पुरुषो मरणनो अवसर आवे छते पूर्वे करेला अशुभ कर्मना उदयना प्रभावे करी नियाणुं करी पछी मरण विराधीने मिथ्यात्व पामे छे अने दुर्गतिमां जाय छे. ॥ ५३ ॥

आवी रीते अंत्य अवस्था सुधरवी मुश्केल छे माटे विशेषे करी गुरु

शिष्यने उपदेश करे ते कहे छे.

तस्मात् चंद्रकवेध्यं सकारणं उद्युक्तेन पुरुषेण ॥

तम्हा चंदगविज्झं, सकारणं उज्जुएण पुरिसेण ॥

ते माटे राधावेधनी पेठे हेतु सहित उद्यमवाला पुरुषे ॥

जीवः अविराहितगुणः कर्तव्यः मोक्षमार्गे ॥ ५४ ॥

जीवो अविरहिअगुणो, कायव्वो मुक्खमग्गंमि ॥ ५४ ॥

पोतानो आत्मा ज्ञानादि गुणसहित करवो मोक्षमार्ग साधवा माटे॥ ५४ ॥

भावार्थः—मरणनी अवस्था न बगडे ते माटे, राज्यादिकनी इच्छाए करी जेम सावधान पुरुषथी राधावेध सधाय छे तेम पोतानो आत्मा मोक्षमार्ग साधवा माटे ज्ञानादिक गुणोए सहित करवो. ॥ ५४ ॥

ज्ञानादिक गुण सहित केवी रीते थाय ते बतावे छे.

बाह्ययोगविरहितः अभ्यंतर–ध्यान–योगं आश्रितः ॥

बाहिरजोगविरहिओ, अप्भिंतर–झाण–जोगमल्लीणो ॥

पुद्गलिकव्यापारे रहित आत्मानुंस्वरूपचितवननाव्यापारने करनार ॥

यथा तस्मिन् देशकाले अमूढसंज्ञः त्यजति देहं ॥ ५५ ॥

जह तंमि देसकाले, अमूढसन्नो चयइ देहं ॥ ५५ ॥

जेम ते अवसरने विषे सावधान मनवालो मुके शरीरने ॥ ५५ ॥

भावार्थ.—मरणना अवसरने विषे आत्मा जेम संसार संबंधीना व्यापारनी चिंतवनाए रहित थतो अने आत्माने हितकारी जे चिंतवना तेना व्यापारे सहित थतो तेमज सावधान मन सहित थतो पोताना शरीरना त्याग करे तेम करवुं ॥ ५५ ॥

आवी रीते विधि सहित शरीरनो त्याग करनार वली जे चिंतवे ते कहे छे.

हत्वा रागद्वेषौ भित्त्वा च अष्टकर्मसंघातं ॥

हंतूण रागदोसं, भित्तूण य अठ्ठकम्मसंघायं ॥

हणीने रागद्वेषने नाश करीने आठकर्मना समूहने ॥

जन्ममरणारहट्टं भित्त्वा भवात् विमोक्ष्यसे ॥ ५६ ॥

जम्मणमरणरहट्टं, भित्तूण भवा विमुच्चिहिसि ॥ ५६ ॥

जन्म अने मरणरूप अरहट्टने भेदीने संसारथी मुकाशे ॥ ५६ ॥

भावार्थः—हे जीव! रागद्वेषने हणीने, तेमज आठ कर्मना समूहनो क्षय करी, तेमज जन्म मरणरुप जे अरहट्ट (घमीन्नुं यंत्र) तेने छेदीने, संसारनो त्याग करी, मुक्ति पद पामीश. ॥ ५६ ॥

अनशन करनार पूर्वे कहेला उपदेशने जेवी रीते आदरपूर्वक अंगीकार करे ते बतावे छे.

एवं सर्वोपदेशं जिनदिष्टं श्रद्धधामि त्रिविधेन ॥

एवं सव्वुवएसं, जिणदिठं सद्दहामि तिविहेणं ॥

आ प्रकारे सर्व उपदेश जिनेश्वरे बतावेलो सद्दहुं छुं मन वचन कायाये करी ॥

त्रसस्थावर—क्षेमकरं पारं निर्वाणमार्गस्य ॥ ५७ ॥

तसथावर—खेमकरं, पारं निव्वाणमग्गस्स ॥५७॥

त्रस अने स्थावरने कल्याण करनार पारपमाडनार मोक्षमार्गनो ॥ ५७ ॥

भावार्थः—आ पयन्नामां प्रथम आ प्रकारे कहेलो जिनेश्वर भगवाने बतावेलो अने त्रस तथा थावर जीवोना कल्याणने करनार तेमज मोक्षने प-

मांभनार एवो सर्व उपदेश मन, वचन, कायाए करी सद्दहुं. ॥ ५७ ॥

गुरुए मरण सुधारवाने माटे जीव ज्ञानादि गुण सहित करवो एम कह्यु हतुं ते ज्ञानादिक श्रुतनी विचारणा करवाथी थाय तेमां मरणना अवसरमां केटलुं श्रुत चिंतववुं ते कहे छे.

नहि तस्मिन्देशकाले शक्यः द्वादशविधः श्रुतस्कंधः ॥

नहि तंमि देसकाले, सक्को बारसविहो सुअक्खंधो ॥

नहि ते अवसरने विषे समर्थ बार अंगरूप श्रुतस्कंध ॥

सर्वः अनुचिंतयितुं धनितअपि समर्थचित्तेन ॥ ५८ ॥

सव्वो अणुचिंतेउं, धणियंपि समथ्थचित्तेण ॥ ५८ ॥

सर्व चिंतववाने अतिशय समर्थचित्तवालाए पण ॥ ५८ ॥

भावार्थ.–मरणना अवसरे अतिशय चित्तनी समर्थाइवाला प्राणीए पण बार अंग रुप जे सर्व श्रुतज्ञान ते चिंतवी शकातुं नथी. सर्व श्रुतज्ञान चिंतवी न शकाय तो शुं करवु ते बतावे छे.

एकस्मिन्नपि यस्मिन्पदे संवेगं वीतरागमार्गे ॥

एगंमिवि जंमि पए, संवेगं वीअरायमग्गंमि ॥

एकपण जे पदने विषे वैराग्य वीतरागनामार्गमां ॥

गच्छति नरः अभीक्ष्णं तन्मरणं तेन मर्त्तव्यं ॥ ८९ ॥

गच्छइ नरो अभिक्खं, तं मरणं तेण मरिअव्वं ॥ ८९ ॥

पामे मनुष्य वारंवार ते उत्तम मरण तेवा मरणे मरवुं ॥ ८९ ॥

भावार्थः—वीतरागना मार्गमां जे एकपण पदने विषे मनुष्य वारंवार वैराग्य पामे तेवा पदना स्मरण करवा सहित जे मरवुं ते उत्तम मरण. तेवा उत्तम मरणे करी समाधि सहित मरवुं. ॥ ८९ ॥

बार अंगरुप सर्व श्रुतनो विचार थइ शकतो नथी; परंतु एक बे श्लोकनुं स्मरण करी शकाय माटे शुं करवुं ते कहे छे.

तस्मात् एकमपि श्लोकं यः पुरुषः मरणदेशकाले ॥

ता एगंपि सिलोगं, जो पुरिसो मरणदेसकालंमि ॥

ते माटे एक पण श्लोक, जे पुरुष मरणनाअवसरमां ॥

आराधनोपयुक्तः स्मरन् आराधको भवति ॥ ६० ..

आराहणोवउत्तो, चिंतंतो राहगो होइ ॥ ६० ॥

आराधनाने उपयोगवालो चिंतवतो आराधक होय छे ॥ ६० ॥

भावार्थ —मरणना अवसरमा सर्व श्रुत चिंतवी शकातुं नथी ते माटे आराधनना उपयोग सहित पुरुष वैराग्यने करनार एहवा एक पण श्लोकने विचारतो थको आराधक थाय छे. ॥ ६० ॥

हवे आराधना करनारने शुं फल थाय ते बतावे छे.

आराधनोपयुक्तः काल कृत्वा सुविहितः सम्यक् ॥

आराहणोवउत्तो, कालं काऊण सुविहिउ सम्मं॥

आराधना करवाना उपयोगवालो काल करीने रुडा आचारवालो रुडी रीते॥

उत्कृष्टतः त्रीन्भवान् गत्वा लभते निर्वाण ॥ ६१ ॥

उक्कोस तिन्निभवे, गंतूणं लहइ निव्वाणं ॥ ६१ ॥

उत्कृष्टथी त्रण भव करीने पामे छे मोक्षने ॥ ६१ ॥

ज्ञावार्थः आराधनाना उपयोगवाला उक्त मुनिमहाराजा रुमी रीते समाधि सहित मरण करी वधारामां वधारे त्रण ज्ञवे करी सिद्ध थाय छे. ।६१।

अनशन जेमणे कर्युं छे एहवा मुनिमहाराजा शुं चिंतवता थका सर्व वस्तु वोसरावे ते कहे छे.

श्रमण इति अहं प्रथमं द्वितीयं सर्वत्र संयतोस्मि इति ॥
समणु त्ति अहं पढमं, वीअं सव्वत्थ संजउमि त्ति ॥
साधुछु हुं पेहेलां वीजु सर्व वस्तुमां संयम वालो छुं ॥
सर्वं च व्युत्सृजामि एतत् भणितं समासेन ॥ ३२ ॥
सव्वं च वोसिरामि, एअं ज्ञणियं समासेणं ॥ ६२ ॥
सर्व वली वोसरावुं छुं ए कह्युं संक्षेपे करी ॥ ६२ ॥

ज्ञावार्थः--प्रथम तो हुं महाव्रतवालो छुं अने वीजु सर्व पदार्थोने विषे रागद्वेषनी परिणतिने रोकवारुप संयमवालो छुं. आ हेतु माटे मारे पुद्गलपदार्थना ममत्वज्ञावे करीने शुं? तेथी सर्व शरीरपर्यंत पुद्गलिकपदार्थोने वोसरा-

वु छुं. आ जैनशासननुं रहस्य संक्षेपे काशु ॥ ६२ ॥

हवे मरणना अवसरमा जेवी भावना करवी जोइए ते बतावे छे

लब्ध अलब्धपूर्वं जिनवचन सुभाषित अमृतभूत ॥
लद्धं अलद्धपुब्बं, जिणवयणं सुभासिअं अमयभूअं ॥
पाम्यु पूर्वे नहीं पामेलु जिनना आगममां कहेलु अमृततुल्य ॥

गृहीतः सुगतिमार्गः नाह मरणाद् बिभेमि ॥ ६३ ॥
गहिओ सुगइमग्गो, नाहं मरणस्स बीहेमि ॥ ६३ ॥
ग्रहण कर्यो सिद्धि गतिनो मार्ग नथी हु मरणथकी बीहतो ॥ ६३ ॥

भावार्थः–जिनेश्वर भगवानना आगममां बतावेलुं अमृत सरखु अने पूर्वे नहीं पामेलुं एहवुं आत्मतत्व हुं पाम्यो अने मोक्ष गतिनो ज्ञानदर्शनचारित्ररुप मार्ग ते पण ग्रहण कर्यो तो हवे हुं मरण थकी बीहतो नथी. ॥ ६३ ॥

तेमज वली विशेषे चिंतववा योग्य भावना बतावे छे.

धीरेणापि मर्त्तव्यं कापुरुषेणापि अवश्यं मर्त्तव्यं ॥

धीरेणवि मरियव्वं, काउरिसेणवि अवस्स मरियव्वं ॥

धीर पुरुषे पण मरवुं पडे छे अने कायर पुरुषे पण अवश्य मरवुं पडे छे ॥

द्वयोरपि हु मर्त्तव्ये वरं खु धीरत्वेन मर्तुं ॥ ६४ ॥

दुन्हं पि हु मरियव्वे, वरं खु धीरत्तणे मरिउं ॥६४॥

बन्नेने पण निश्चे मरण छतां सुंदर निश्चे धीरपणे मरवुं ॥ ६४ ॥

भावार्थः—वीर पुरुषे पण मरवुं पडे छे अने कायर पुरुषे पण मरवुं पडे छे. बन्नेने अवश्ये मरवुं तो पडेज छे; परंतु धीरपणे मरतां फरी वधारे वखत मरण करवुं पडतुं नथी. अने कायरपणे मरी फरीथी अनंती वखत जन्ममरण करवां पडे छे, ए रीते धीरपणाए मरवामां अति लाभ अने कायरपणे मरवामां अति दुःख समजी, निश्चये करी जे धीरपणा सहित मरवुं तेज उत्तम छे. जन्मारा सुधी करेलां जे जे धर्मनां कार्यो ते पण धीरपणा सहित मरतांज सफल थाय छे ॥ ६४ ॥

मरती वखते पीमा थता पण पोताना अंगीकार करेला शीलव्रतोने लगार मात्र पण दूषण लगामवुं योग्य नथी ते बतावे छे

शीलेनापि मर्त्तव्य निःशीलेनापि अवश्य, मर्त्तव्य ॥

सीलेणवि मरियवं, निस्सीलेणवि अवस्स मरियवं ॥

शीलवालाए पण मरवु पडे छे शीलरहित माणसे पण अवश्य मरवु पडे छे ॥

द्वयो रपि हु मर्त्तव्ये वरं खु शीलत्वेन मर्त्तुं ॥ ६५ ॥

डुन्ह पि हु मरियवं, वरं खु शीलत्तणो मरिउं ॥६५॥

बन्नेने पण निश्चे करी मरवानु छतां सुंदर निश्चे शीलसहित मरवुं ॥ ६५ ॥

नावार्थ.—शील सहित माणसे पण मरवुं पमे छे. अने शील रहित माणसे पण मरवु पमे छे फक्त शील सहित मरता छता अनंतां जन्ममरणना दुःख नाश पामे छे, अने शील त्यागीने मरण करता अनंती वखत जन्म मरणना दुःख जोगववा पमे छे, एम समजी अवश्ये पोते जे जे ब्रह्मव्रतादिक सारा आचारो ग्रहण करेला होय तेमां दूषण नहीं लगामता शीलसहित म-

रवुं तेज उत्तम छे ॥ ६५ ॥

पूर्वे कहेला उपदेशादिक थकी अनशन करनार मुनिमहाराज आम स्वरुपनी रमणतामां स्थिर थए छते समाधि मरण कहेवाना द्वारे करी चार गाथाए गुरुमहाराज उपदेश आपता छता कहे छे.

ज्ञानस्य दर्शनस्य च सम्यक्त्वस्य च चारित्रयुक्तस्य ॥

**नाणस्स दंसणस्स य, सम्मत्तस्स य चरित्तजुत्तस्स ॥**

ज्ञानमां दर्शनमां अने सम्यक्त्वमां चारित्र सहित ॥

यः करिष्यति उपयोगं संसाराद् सः विमोक्ष्यते ॥ ६६ ॥

**जो काहि उवओगं, संसारा सो विमुच्चिहिसि ॥ ६६ ॥**

जे करशे सावधान पणुं संसारथकी ते विशेषे करी मुकाशे ॥ ६६ ॥

भावार्थः—जन्मारा सुधी जे ज्ञान वधार्युं होय तेमां, तथा सामान्य ज्ञानरूप जे दर्शन जन्मारा सुधी अभ्यास करी मेलव्युं होय तेमां, तथा सम्यक्त्वमां, तथा पांच समिति, त्रण गुप्तिरुप व्यवहार चारित्र, अने निजगुण

स्थिरतारूप नैश्चयिक चारित्रमां, जे जीव मरण अवसरे सावधानपणुं राखे छे अर्थात् उपर कहेला गुणो जे प्राप्त थएला होय तेने लगारमात्र पण हानि पामवा देता नथी. ते प्राणी जलदी संसारना दुःखोथी मुकाशे. ॥ ६६ ॥

चिरोषितः ब्रह्मचारी प्रस्फोटयिता शेषकं कर्म ॥

चिरउसिअ बंभयारी, पप्फोडेऊण सेसयं कम्मं ॥

घणा काल सेव्युं छे ब्रह्मचर्य जेणे नाश करीने बाकीनां कर्म ॥

आनुपूर्व्या विशुद्धः गच्छति सिद्धिं धुतक्लेशः ॥ ६७ ॥

आणुपुव्वीइ विसुद्धो, गच्छइ सिद्धिं धुअकिलेसो ॥ ६७ ॥

अनुक्रमे शुद्ध थयो छतो जाय सिद्धिमां नाश कर्या छे सर्व क्लेश जेणे ॥६७॥

भावार्थ —लांबा काल सुधी ब्रह्मचर्यनुं सेवन जेणे कर्युं छे एहवो प्राणी ब्रह्मचर्य सेवीने खपावेला कर्मथी बाकी रहेला घातिकर्मने क्षय करी अनुक्रमे अति विशुद्धिवालो थयो छतो भवोपग्राही कर्मथी थता क्लेश ते पण जेणे नाश पमाड्या छे एहवो थइ सिद्धिगतिमां जाय छे. ॥ ६७ ॥

निष्कषायस्य दांतस्य शूरस्य व्यवसायिनः ॥
निक्कसायस्स दंतस्स, सूरस्स ववसाइणो ॥
कषायरहित दान्त शूरवीर अने उद्यमवंत ॥

संसारपरिभीतस्य प्रत्याख्यानं शुभंभवेत् ॥ ६८ ॥
संसारपरिज्नीअस्स, पच्चरकाणं सुहंज्नवे ॥ ६८ ॥
संसारथी भयभ्रांत एहवानुं पच्चखाण रुडुं होय ॥ ६८ ॥

ज्नावार्थः—जे कषाय रहित होय, तेमज पांच इंद्रिय अने छठा मनना दमनने करनार होय, तेमज आत्माना वीर्यना प्रगटपणाए करी शूरवीर होय, तेमज आत्महितना करनार कार्योमां उद्यमवंत होय, प्रमादी न होय, अने संसारमां थतां जे पाप सहित कार्यो तथा संसारमां थतुं जे ज्र-मण ते थकी ज्नयज्रांत होय तेवा आत्माना उपयोगवाला पुरुषनुं पच्चरकाण रुडुं होय ॥ ६८ ॥

एतत्प्रत्याख्यान यः कारिष्यति मरणदेशकाले ॥

एअं पच्चक्खाणं, जो काही मरणदेसकालंमि ॥

आ पच्चक्खाण जे करशे मरणना अवसरमां ॥

धीरः अमूढसंज्ञः स गच्छति उत्तम स्थान ॥ ६९ ॥

धीरो अमूढसन्नो सो गच्छइ उत्तमं ठाणं ॥ ६९ ॥

धीर मुझवण रहित ज्ञानवालो ते पामशे उत्तम स्थानकने ॥ ६९ ॥

भावार्थ.—आ पहेलां विस्तार सहित कहेला पच्चक्खाणने जे मरणना अवसरमां धैर्यता युक्त थइ तेमज मुझवण रहित ज्ञानवालो थइ करशे ते, उत्तम स्थानक जे मोक्ष ते पामशे. ॥ ६९ ॥

हवे आउरपच्चक्खाणना अंत्यमंगलने करवा इच्छता शास्त्रकार आ पयन्नानी छेल्ली गाथा कहे छे.

धीरः जरामरणवित् धीरः (वीरः) विज्ञानज्ञानसंपन्नः ॥
धीरो जरमरणविऊ, धीरो (वीरो पाठांतरं) विन्नाणनाणसंपन्नो॥
धीर जरा अने मरणने जाणनार धीर (वीर जिनेश्वर) ज्ञानदर्शने सहित ॥
लोकस्योद्योतकरः दिशतु क्षयं सर्वदुःखानां ॥ ७० ॥
लोगस्सुज्जोअगरो, दिसउ खयं सव्वदुक्खाणं ॥ ७० ॥
लोकमां उद्योतना करनार वतावे क्षय सर्व दुःखोनो ॥ ७० ॥

भावार्थः—त्रण ज्ञान सहित जनमवाए करी जन्मथी पण त्रण ज्ञानरूप बुद्धिए शोभायमान धीर एहवा तेमज जरामरणना स्वरूपने तथा तेना नाशना उपायने जाणनार होवाथी जरामरणना जाण, तेमज सर्व भव्य प्राणिउने मोक्षना साधनो जाणवानी बुद्धि आपवाथी धीर (पाठांतरमां वीर शब्दथी महावीरस्वामिभगवान् बीजा अर्थमां आ पयन्नाना रचनार वीरभद्रमुनिमहाराजाए पयन्नाना अंतमां पोतानुं नाम पण सूचव्युं ) तेमज के-

वलज्ञानरूप विज्ञान अने केवलदर्शनरूप ज्ञान ए बन्नेए करी सहित पाच कल्याणकमा द्रव्य प्रकाशे करी लोकमां उद्योतना करनार अथवा केवलज्ञाने करी धर्मास्तिकाय, अधर्मास्तिकाय, आकाशास्तिकाय, पुद्गलास्तिकाय अने जीवास्तिकाय ए प्रकारे पंचास्तिकायरूपलोकने बतावनार एहवा जिनेश्वर जगवान् संसारिक सर्व दुःखनो क्षय तमोने आपो. ॥ ७० ॥

॥ इति श्रेयोऽस्तुलेखकवाचकानां ॥

॥ इति श्रीमद्वीरजद्राचार्यकृतातुरप्रत्याख्यानप्रकीर्णकं समाप्तम् ॥

# ॥ गुणस्थानक्रमारोहः ॥

गुणस्थानक्रमारोहहतमोहं जिनेश्वरं । नमस्कृत्य गुणस्थानस्वरूपं किंचिदुच्यते ॥ १ ॥
चतुर्दशगुणश्रेणिस्थानकानि तदादिमं । मिथ्यात्वाख्यं द्वितीयं तु स्थानं सास्वादनाभिधं ॥२॥
तृतीयं मिश्रकं तुर्यं सम्यग्दर्शनमव्रतं । श्राद्धत्वं पंचमं षष्ठं प्रमत्तश्रमणाभिधं ॥ ३ ॥
सप्तमं त्वप्रमत्तं चापूर्वात्करणमष्टमं । नवमं चानिवृत्ताख्यं दशमं सूक्ष्मलोभकं ॥ ४ ॥
एकादशं शांतमोहं द्वादशं क्षीणमोहकं । त्रयोदशं सयोगाख्यमयोगाख्यं चतुर्दशं ॥५॥
अदेवागुर्वधर्मेषु या देवगुरुधर्मधीः। तन्मिथ्यात्वं भवेद्व्यक्तमव्यक्तं मोहलक्षणं ॥ ६ ॥
अनाद्यव्यक्तमिथ्यात्वं जीवेऽस्त्येव सदा परं। व्यक्तमिथ्यात्वधीप्राप्तिर्गुणस्थानतयोच्यते ॥७॥
मद्यमोहाद्यथा जीवो न जानात्यहितं हितं। धर्माधर्मौ न जानाति तथा मिथ्यात्वमोहितः ॥८॥
अभव्याश्रितमिथ्यात्वेऽनाद्यनंता स्थितिर्भवेत्। सा भव्याश्रितमिथ्यात्वेऽनादिसांता पुनर्मता ॥९॥
अनादिकालसंभूतमिथ्याकर्मोपशांतितः। स्यादौपशमिकं नाम जीवे सम्यक्त्वमादितः ॥१०॥

गुण० एकस्मिन्नुदिते मध्याच्छांतानंतानुबंधिनां । आद्यौपशमसम्यक्त्वशैलमौलेः परिच्युतः ॥११॥ स्था

॥ १ ॥ समयादावलीषट्कं यावन्मिथ्यात्वभूतलं। नासादयति जीवोऽयं तावत्सास्वादनो भवेत्॥१२॥

मिश्रकर्मोदयाज्जीवे सम्यङ्मिथ्यात्वमिश्रितः।यो भावोंऽतर्मुहूर्त्तंस्यात्तन्मिश्रस्थानमुच्यते १३

जात्यंतरसमुद्भूतिर्वडवाखरयोर्यथा । गुडदध्नोःसमायोगे रसभेदांतरं यथा ॥ १४ ॥

तथा धर्मद्वये श्रद्धा जायते समबुद्धितः। मिश्रोऽसौ भण्यते तस्माद्भावो जात्यंतरात्मकः १५

आयुर्बध्नाति नो जीवो मिश्रस्थो म्रियते न च। सद्दृष्टिर्वा कुदृष्टिर्वा भूत्वा मरणमश्नुते॥१६॥

सम्यग्मिथ्यात्वयोर्मध्ये ह्यायुर्येनार्जितं पुरा। म्रियते तेन भावेन गतिं याति तदाश्रितां॥१७॥

या यथोक्तेषु तत्त्वेषु रुचिर्जीवस्य जायते। निसर्गादुपदेशाद्वा सम्यक्त्वं हि तदुच्यते ॥१८॥

द्वितीयानां कषायाणामुदयाद्व्रतवर्जितं । सम्यक्त्वं केवलं यत्र तच्चतुर्थं गुणास्पदं ॥ १९ ॥

उत्कृष्टास्य त्रयस्त्रिंशत्सागरा साधिका स्थितिः । तदर्द्धपुद्गलावर्त्तभवैर्न्यैरवाप्यते ॥ २० ॥

कृपाप्रशमसंवेगनिर्वेदास्तिक्यलक्षणाः । गुणा भवंति यच्चिते स स्यात्सम्यक्त्वभूषितः॥२१॥

क्षायोपशमिकीदृष्टिः स्यान्नरामरसंपदे । क्षायिकी तु भवे तत्र त्रितये ला विमक्तये ॥२२॥ ॥ १ ॥

देवे गुरौ च संघे च सद्भक्तिं शासनोन्नतिं । अव्रतोऽपि करोत्येव स्थितस्तुर्ये गुणालये ॥२३॥
प्रत्याख्यानोदयाद्देशविरतिर्यत्र जायते । तच्चतुर्थं हि देशोनपूर्वकोटिगुरुस्थितिः ॥ २४ ॥
आर्त्तरौद्रं भवेदत्र मंदं धर्म्यं तु मध्यमं । षट्कर्मप्रतिमाश्राद्धव्रतपालनसंभव ॥ २५ ॥
अतः परं प्रमत्तादिगुणस्थानकसप्तके । अंतर्मुहूर्त्तमेकैकं प्रत्येकं गदिता स्थितिः ॥ २६ ॥
कषायाणां चतुर्थानां व्रती तीव्रोदये सति । भवेत्प्रमादयुक्तत्वात् प्रमत्तस्थानगो मुनिः ॥२७॥
अस्तित्वान्नोकषायाणामत्रार्त्तस्यैव मुख्यता । आज्ञाद्यालंबनोपेतधर्मध्यानस्य गौणता ॥२८॥
यावत्प्रमादसंयुक्तस्तावत्तस्य न तिष्ठति । धर्मध्यानं निरालंबमित्यूचुर्जिनभास्कराः ॥ २९॥
प्रमाद्यावश्यकत्यागान्निश्चलं ध्यानमाश्रयेत् । योऽसौ नैवागमं जैनं वेत्ति मिथ्यात्वमोहितः ॥३०॥
तस्मादावश्यकैः कुर्यात् प्राप्तदोषनिकृंतनं । यावन्नाप्नोति सद्ध्यानमप्रमत्तगुणाश्रितं ॥३१॥
चतुर्थानां कषायाणां जाते मंदोदये सति । भवेत्प्रमादहीनत्वादप्रमत्तो महाव्रती ॥ ३२ ॥
नष्टाशेषप्रमादात्मा व्रतशीलगुणान्वितः । ज्ञानध्यानधनो मौनी शमनक्षपणोन्मुखः ॥३३॥
सप्तकोत्तरमोहस्य शमनाय क्षयाय वा । सद्ध्यानसाधनारंभं कुरुते मुनिपुंगवः ॥ ३४ ॥

धर्मध्यानं भवत्यत्र मुख्यवृत्त्या जिनोदितं । रूपातीततया शुक्लमपि स्यादंशमात्रतः ॥ ३५ ॥ स्था०
गु० इत्येतस्मिन् गुणस्थाने नो सन्त्यावश्यकानि षट् । सततं ध्यानसद्योगाच्छुद्धिः स्वाभाविकी यतः ।३६।
२ ॥ अपूर्वात्मगुणाप्तित्वादपूर्वकरणं मतं । भावानामनिवृत्तित्वादनिवृत्तिगुणास्पदं ॥ ३७ ॥
अस्तित्वात्सूक्ष्मलोभस्य भवेत्सूक्ष्मकषायकं । शमनाक्रांतमोहं स्यात्क्षपणात्क्षीणमोहकं ३८
तत्रापूर्वगुणस्थानाद्यांशादेवाधिरोहति । शमको हि शमश्रेणीं क्षपकः क्षपकावलीं ॥ ३९ ॥
पूर्वज्ञः शुद्धिमान् युक्तो ह्याद्यैः संहननैस्त्रिभिः । संध्यायन्नाद्यशुक्लांशं स्वां श्रेणीं शमकः श्रयेत्
श्रेण्यारूढः कृते कालेऽहमिन्द्रेष्वेव गच्छति । पुष्टायुस्तूपशांतांतं नयेच्चारित्रमोहनं ॥ ४१ ॥
अपूर्वादिद्वयैकैकगुणेषु शमकः क्रमात् । करोति विंशतेः शांतिं लोभाणुत्वं च तत्क्रमं ॥४२॥
शांतदृक्वृत्तमोहत्वादत्रौपशमिकाभिधे । स्यातां सम्यक्त्वचारित्रे भावश्चौपशमात्मकः ।४३।
वृत्तमोहोदयं प्राप्योपशमी च्यवते ततः । अधःकृतमलं तोयं पुनर्मालिन्यमश्नुते ॥ ४४ ॥
अपूर्वाद्यास्त्रयोऽप्यूर्ध्वमेकं यांति शमोद्यताः । चत्वारोऽपि च्युतावाद्यं सप्तमं वान्त्यदेहिनः ।४५।
आसंसारं चतुर्वारमेव स्याच्छमनावली । जीवस्यैकभवे वारद्वयं स्याद्यदि जायते ॥ ४६ ॥ ॥ २ ॥

अतो वक्ष्ये समासेन क्षपकश्रेणिलक्षणं । योगी कर्मक्षयं कर्तुं यामारुह्य प्रवर्त्तते ॥ ४७ ॥
अनिबद्धायुषः प्रांत्यदेहिनो लघुकर्मणः । असंयतगुणस्थाने नरकायुः क्षयं व्रजेत् ॥ ४८ ॥
तिर्यगायुः क्षयं याति गुणस्थाने तु पंचमे । सप्तमे त्रिदशायुश्च दृग्मोहस्यापि सप्तकं॥४९॥
दशैता प्रकृतीःसाधुः क्षयं नीत्वा विशुद्धीः।धर्मध्याने कृताभ्यासः प्राप्नोति स्थानमष्टमं॥५०॥
तत्राष्टमे गुणस्थाने शुक्लसद्ध्यानमादिमं । ध्यातुं प्रक्रमते साधुराद्यसंहननान्वितः ॥५१॥
निष्प्रकंपं विधायाथ दृढं पर्यंकमासनं । नासाग्रदत्तसन्नेत्रः किंचिदुन्मीलितेक्षणः ॥ ५२ ॥
विकल्पवागुराजालाद्दूरोत्सारितमानसः । संसारछेदनोत्साहो योगींद्रो ध्यातुमर्हति ॥५३॥
अपानद्वारमार्गेण निःसरंतं यथेछया । निरुध्योर्ध्वप्रचाराप्तिं प्रापयत्यनिलं मुनिः ॥ ५४ ॥
द्वादशांगुलपर्यंतं समाकृष्य समीरणं । पूरयत्यतियत्नेन पूरकध्यानयोगतः ॥ ५५ ॥
निःसार्यते ततो यत्नान्नाभिपद्मोदराच्छनैः । योगिना योगसामर्थ्याद्रेचकाख्य प्रभंजनः॥५६॥
कुंभवत्कुंभकं योगी श्वसनं नाभिपंकजे । कुंभकध्यानयोगेन सुस्थिरं कुरुते क्षणं ॥५७॥
इत्येवं गंधनाडीनामाकुंचनविनिर्गमौ । संसाध्य निश्चलं धत्ते चित्तमेकाग्रचिंतने ॥ ५८ ॥

प्राणायामक्रमप्रौढिरत्ररूढ्यैवदर्शिता ।क्षपकस्य यतः श्रेण्यारोहे भावो हि कारणं ॥ ५९ ॥
सवितर्कं सविचारं सपृथक्त्वमुदाहृतं । त्रियोगयोगिनः साधोराद्यं शुक्लं सुनिर्मलं ॥ ६० ॥
श्रुतचिंता वितर्कः स्यात् विचारः संक्रमो मतः।पृथक्त्वं स्यादनेकत्वं भवत्येतत्त्रयात्मकं।६१।
स्वशुद्धात्मानुभूत्यात्मभावश्रुतावलंबनात् । अंतर्जल्पो वितर्कः स्याद्यस्मिंस्तत्सवितर्कजं।६२।
अर्थादर्थांतरे शब्दाच्छब्दांतरे च संक्रमः । योगाद्योगांतरे यत्र सविचारं तदुच्यते ॥ ६३ ॥
द्रव्याद् द्रव्यांतरं याति गुणाद्याति गुणांतरं । पर्यायादन्यपर्यायं सपृथक्त्वं भवत्यदः ॥६४॥
इति त्रयात्मकं ध्यानं ध्यायन्योगी समाहितः।संप्राप्नोतिपरांशुद्धिं सिद्धिश्रीसौख्यवर्णिकां ६५
यद्यपि प्रतिपात्येतच्छुक्लध्यानं प्रजायते । तथाप्यतिविशुद्धत्वादूर्ध्वस्थानं समीहते ॥६६॥
अनिवृत्तिगुणस्थानं ततः समधिगच्छति । गुणस्थानस्य तस्यैव भागेषु नवसुक्रमात्॥ ६७॥
गतिः श्वाभ्री च तैरश्ची द्वे तयोरानुपूर्विके। साधारणत्वमुद्योतःसूक्ष्मत्वं विकलत्रयं ॥६८॥
एकेंद्रियत्वमातापस्त्यानगृद्ध्यादिकत्रयं। स्थावरत्वमिहाद्यंशे क्षीयंते षोडशेत्यमूः ॥ ६९ ॥
अष्टौ मध्यकषायांश्च द्वितीयेऽथ तृतीयके । षंढत्वं तुर्यके स्त्रीत्वं हास्यषट्कं च पंचमे॥७०॥

चतुर्ष्वंशेषु शेषेषु क्रमेणैवातिशुद्धितः।पुंवेदश्च ततः क्रोधो मानो माया च नश्यति ॥७१ ॥
ततोऽसौ स्थूललोभस्य सूक्ष्मत्वं प्रापयन् क्षणात्।आरोहति मुनिः सूक्ष्मसंपरायं गुणास्पदं७२
एकादश गुणस्थानं क्षपकस्य भवेन्न हि । दशमात्सूक्ष्मलोभनाशान्क्षपयन् द्वादशव्रजेत् ७३
भूत्वाथ क्षीणमोहात्मा वीतरागो महायतिः। पूर्ववद्भावसंयुक्तो द्वितीयं शुक्लमाश्रयेत्।७४।
अपृथक्त्वमविचारं सवितर्कं गुणान्वितं । स ध्यायत्येकयोगेन शुक्लध्यानं द्वितीयकं ॥७५॥
निजात्मद्रव्यमेकं वा पर्यायमथवा गुणं । निश्चलं चिंत्यते यत्र तदेकत्वं विदुर्बुधाः ॥७६ ॥
यद्व्यंजनार्थयोगेषु परावर्तविवर्जितं । चिंतनं तदविचारं स्मृतं सद्ध्यानकोविदैः ॥ ७७ ॥
निजशुद्धात्मनिष्ठं हि भावश्रुतावलंबनात् । चिंतनं क्रियते यत्र सवितर्कं तदुच्यते ॥७८॥
इत्येकत्वमविचारं सवितर्कमुदाहृतं । तस्मिन् समरसीभावं धत्ते स्वात्मानुभूतितः ॥७९॥
(सोऽयं समरसीभावस्तदेकीकरणं मतं । आत्मा यदपृथक्त्वेन लीयते परमात्मनि ॥८०॥)
इत्येतद्ध्यानयोगेन प्लुष्यत्कर्मेंधनोत्करः । निद्राप्रचलयोर्नाशमुपान्त्ये कुरुते क्षणे ॥ ८१ ॥
अंत्ये दृष्टिचतुष्कं च दशकं ज्ञानविघ्नयोः। क्षपयित्वा मुनिः क्षीणमोहः स्यात्केवलात्मकः८२

गुण० एवंच क्षीणमोहांतात्रिषष्टिप्रकृतिस्थितिः। पंचाशीतिजरद्वस्त्रप्राया: शेषाःसयोगिनि ॥८३॥

॥ ४ ॥ भावोऽत्र क्षायिकः शुद्धः सम्यक्त्वं क्षायिकं परं। क्षायिकंहि यथाख्यातचारित्रं तस्य निश्चितं ८४

चराचरमिदं विश्वं हस्तस्थामलकोपमं। प्रत्यक्षं भासते तस्य केवलज्ञानभास्वतः ॥८५॥

विशेषात्तीर्थकृत्कर्म येनास्त्यार्जितमूर्जितं। तत्कर्मोदयतोऽत्रासौ स्याज्जिनेंद्रो जगत्पतिः ।८६।

स सर्वातिशयैर्युक्तः सर्वामरनरैर्नतः। चिरं विजयते सर्वोत्तमं तीर्थं प्रवर्तयन् ॥ ८७ ॥

वेद्यते तीर्थकृत्कर्म तेन सद्देशनादिभिः। भूतले भव्यजीवानां प्रतिबोधादि कुर्वता ॥८८॥

उत्कर्षतोऽष्टवर्षोनपूर्वकोटीप्रमाणकं। कालं यावन्महीपीठे केवली विहरत्यलं ॥ ८९ ॥

चेदायुषः स्थितिन्यूना सकाशाद्वेद्यकर्मणः। तदा तत्तुल्यतां कर्तुं समुद्घातं करोत्यसौ॥९०॥

दंडत्वं च कपाटत्वं मंथानत्वं च पूरणं। कुरुते सर्वलोकस्य चतुर्भिः समयैरसौ ॥ ९१ ॥

एवमात्मप्रदेशानां प्रसारणविधानतः। कर्मलेशान् समीकृत्योत्क्रमात्तस्मान्निवर्तते ॥ ९२ ॥

समुद्घातस्य तस्याद्येऽष्टमे च समये मुनिः। औदारिकांगयोगः स्यात् द्विषट्सप्तमकेषुतु॥९३॥

मिश्रौदारिकयोगी च तृतीयाद्येषु च त्रिषु। समयेष्वेककर्मांशधरोऽनाहारकश्च सः ॥९४॥॥ ४ ॥

यः षण्मासाधिकायुष्को लभते केवलोद्गमं । करोत्यसौ समुद्घातमन्ये कुर्वंति वा न वा ९५
समुद्घातान्निवृत्तोऽसौ मनोवाक्काययोगवान् । ध्यायेद्योगनिरोधार्थं शुक्लध्यानं तृतीयकं ९६
आत्मस्पंदात्मिका सूक्ष्मा क्रिया यत्रानिवृत्तिका । तत्तृतीयं भवेच्छुक्लं सूक्ष्मक्रियानिवृत्तिकं ९७
बादरे काययोगेऽस्मिन् स्थितिं कृत्वा स्वभावतः । सूक्ष्मीकरोति वाक्चित्तयोगयुग्मं स बादरं ९८
त्यक्त्वा स्थूलवपुर्योगं सूक्ष्मवाक्चित्तयोः स्थितिं । कृत्वा नयति सूक्ष्मत्वं काययोगं च बादरं
स सूक्ष्मकाययोगे च स्थितिं कृत्वा पुनः क्षणं । निग्रहं कुरुते सद्यः सूक्ष्मवाक्चित्तयोगयोः १००
ततः सूक्ष्मे वपुर्योगे स्थितिं कृत्वा क्षणं हि सः । सूक्ष्मक्रियं निजात्मानं चिद्रूपं विंदति स्वयं ।
छद्मस्थस्य यथा ध्यानं मनसः स्थैर्यमुच्यते । तथैव वपुषः स्थैर्यं ध्यानं केवलिनो भवेत् ॥१०२॥
शैलेशीकरणारंभी वपुर्योगे तु सूक्ष्मके । तिष्ठन्नूर्ध्वपदं शीघ्रं योगातीतं यियासति ॥१०३॥
अस्यांतेऽगोदयच्छेदात् स्वप्रदेशघनत्वतः । करोत्यत्यांगसंस्थानाभिन्नागोनावगाहना ॥१०४॥
अथायोगिगुणस्थाने तिष्ठतोऽस्य जिनेशितुः । लघुपंचाक्षरोच्चारप्रमितैव स्थितिर्भवेत् ।१०५।
तत्रानिवृत्तिशब्दांतं समुच्छिन्नक्रियात्मकं । चतुर्थं भवति ध्यानमयोगिपरमेष्ठिनः ॥ १०६ ॥

 समुच्छिन्ना क्रिया यत्र सूक्ष्मयोगात्मिकापि हि । समुच्छिन्नक्रियं प्रोक्तं तद्द्वारं मुक्तिवेश्मनः १०७ 

॥ ५ ॥ देहास्तित्वेऽप्ययोगित्वं कथं तद्घटते प्रभो । देहाभावे तथा ध्यानं दुर्घटं घटते कथं ॥१०८॥

तच्छरीराश्रयाद्ध्यानमस्तीति न विरुध्यते । निजशुद्धात्मचिद्रूपनिर्भरानंदशालिनः ॥ १०९ ॥

वपुषोऽत्रातिसूक्ष्मत्वाच्छीघ्रभाविक्षयत्वतः । कायकार्यासमर्थत्वात् सति कायेऽप्ययोगिता ॥

आत्मानमात्मनात्मैव ध्याता ध्यायति तत्त्वतः । उपचारस्तदन्यो हि व्यवहारनयाश्रितः १११

चिद्रूपात्ममयो योगी ह्युपांत्ये समये द्रुतं । युगपत्क्षपयेत्कर्मप्रकृतीनां द्विसप्ततिं ॥ ११२ ॥

देहबंधनसंघाताः प्रत्येकं पंच पंच च । अंगोपांगत्रयंचैव षट्कं संस्थानसंज्ञकं ॥ ११३ ॥

वर्णाः पंच रसाः पंच षट्कं संहननात्मकं । स्पर्शाष्टकं च गंधौ द्वौ नीचानादेयदुर्भगं॥११४॥

तथा गुरुलघुत्वाख्यमुपघातोऽन्यघातता । निर्माणत्वमपर्याप्तमुच्छ्वासश्चायशस्तथा ॥ ११५ ॥

विहायोगतियुग्मं च शुभस्थैर्यद्वयं पृथक् । गतिर्दिव्यानुपूर्वी च प्रत्येकं च स्वरद्वयं ॥११६॥

वेद्यमेकतरं चेति कर्मप्रकृतयः खलु । द्वासप्ततिरिमा मुक्तिपुरीद्वारार्गलोपमा ॥ ११७ ॥

अंत्ये ह्येकतरं वेद्यमादेयत्वं च पूर्णता । त्रसत्वं बादरत्वं च मनुष्यायुश्च सुयशः ॥ ११८ ॥॥ ५ ॥

नृगतिश्चानुपूर्वी च सौभाग्यं चोच्चगोत्रता । पंचाक्षत्वं तथा तीर्थकृन्नामेति त्रयोदश ॥ ११९॥
क्षयं नीत्वा सलोकांतं तत्रैव समये भजेत् । लब्धसिद्धत्वपर्यायः परमेष्ठी सनातनः ॥१२०॥
पूर्वप्रयोगतोऽसंगभावाद्बंधविमोक्षतः । स्वभावपरिणामाच्च सिद्धस्योर्ध्वगतिर्भवेत् ॥ १२१ ॥
कुलालचक्रदोलेषुमुख्यानां हि यथा गतिः । पूर्वप्रयोगतः सिद्धा सिद्धस्योर्ध्वगतिस्तथा ॥१२२॥
मृल्लेपसंगनिर्मोक्षाद्यथा दृष्टाप्स्वलाबुनः । कर्मसंगविनिर्मोक्षात्तथा सिद्धगतिः स्मृता ॥१२३॥
एरण्डफलबीजादेर्बंधच्छेदाद्यथा गतिः । कर्मबंधनविच्छेदात् सिद्धस्यापि तथेष्यते ॥ १२४ ॥
यथाधस्तिर्यगूर्ध्वं च लेष्टुवाय्वग्निवीचयः । स्वभावतः प्रवर्त्तंते तथोर्ध्वगतिरात्मनः ॥ १२५ ॥
यथाधस्तिर्यगूर्ध्वं ... नचाधोगौरवाभावान्नतिर्यक् प्रेरकं विना । नचधर्मास्तिकायस्याभावाल्लोकोपरि व्रजेत् ॥१२६॥
मनोज्ञा सुरभिस्तन्वी पुण्या परमभासुरा । प्राग्भारानामवसुधा लोकमूर्ध्नि व्यवस्थिता १२७
नृलोकतुल्यविष्कंभा सितछत्रनिभा शुभा । ऊर्ध्वं तस्याः क्षितेः सिद्धा लोकांते समवस्थिता
कालावसरसस्थानायामुक्ताः मागतसिक्थका । तत्रस्थाकाशसंकाशाकारा सिद्धावगाहना ॥१२९॥
ज्ञातारोऽखिलतत्त्वानां द्रष्टारश्चैकहेलया । गुणपर्याययुक्तानां त्रैलोक्योदरवर्त्तिनां ॥ १३० ॥

 अनंतं केवलज्ञानं ज्ञानावरणसंक्षयात् । अनंतंदर्शनंचापि दर्शनावरणक्षयात् ॥ १३१ ॥ 

 क्षायिके शुद्धसम्यक्त्वचारित्रे मोहनिग्रहात् । अनंतसुखवीर्ये च वेद्यविघ्नक्षयाक्रमात् ॥

आयुषःक्षीणभावत्वात् सिद्धानामक्षया स्थितिः । नामगोत्रक्षयादेवामूर्तानंतावगाहना॥१३३॥

यत्सौख्यं चक्रिशक्रादिपदवीभोगसंपदः । ततोऽनंतगुणं तेषां सिद्धावक्लेशमव्ययं ॥ १३४ ॥

यदाराध्यं च यत्साध्यं यद्ध्येयं यच्च दुर्लभं । चिदानंदमयं तत्तैः संप्राप्तं परमं पदं ॥ १३५ ॥

नात्यंताभावरूपा नचजडिममयी व्योमवद्व्यापिनी नो
न व्यावृत्तिं दधाना विषयसुखघना नेष्यते सर्वविद्भिः ॥
सद्रूपात्मप्रसादाद्दृगमगमगुणौघेन संसारसारा
निःसीमात्यक्षसौख्योदयवसतिरनिपातिनी मुक्तिरुक्ता ॥१३६॥

इत्युद्धृतो गुणस्थानरत्नराशिः श्रुतार्णवात् । पूर्वर्षिसूक्तिनावैव रत्नशेखरसूरिभिः ॥ १३७ ॥

॥ इति श्रीगुणस्थानक्रमारोहप्रकरणं समाप्तं ॥

॥ श्री वीतरागाय नमः ॥

# ॥ श्रीतत्त्वार्थसूत्रम् ॥

॥ अथ प्रथमोऽध्यायः ॥

सम्यग्दर्शनज्ञानचारित्राणि मोक्षमार्ग. १ । तत्त्वार्थश्रद्धानं सम्यग्दर्शनम् २ । तन्निसर्गादधिगमाद्वा ३। जीवाजीवाश्रवबंधसंवरनिर्जरामोक्षास्तत्त्वम् ४। नामस्थापनाद्रव्यभावतस्तन्न्यास. ५ । प्रमाणनयैरधिगमः ६ । निर्देशस्वामित्वसाधनाधिकरणस्थितिविधानतः ७ । मतिश्रुतावधिमनःपर्यायकेवलानि ज्ञानम् ८ । सत्संख्याक्षेत्रस्पर्शनकालांतरभावाल्पबहुत्वैश्च ९ । तत्प्रमाणे १० । आद्येपरोक्षम् ११ । प्रत्यक्षमन्यत् १२ । मतिस्मृतिसंज्ञाचिंताभिनिबोध इत्यनर्थांतरम् १३ । तदिंद्रियानिंद्रियनिमित्तम् १४ । अवग्रहेहापायधारणाः १५ ।

बहुबहुविधक्षिप्रानिश्रितासंदिग्धध्रुवाणां सेतराणाम् १६ । अर्थस्य १७ । व्यंजनस्यावग्रहः १८ । न चक्षुरनिंद्रियाभ्याम् १९ । श्रुतं मतिपूर्वं द्व्यनेकद्वादशभेदम् २० । द्विविधोऽवधिः २१ । भवप्रत्ययो नारकदेवानाम् २२ । यथोक्तनिमित्तः षड्विकल्पः शेषाणाम् २३ । ऋजुविपुलमती मनःपर्यायः २४। विशुद्ध्यप्रतिपाताभ्यां तद्विशेषः २५। विशुद्धिक्षेत्रस्वामिविषयेभ्योऽवधिमनःपर्याययोः २६ । मतिश्रुतयोर्निबंधः सर्वद्रव्येष्वसर्वपर्यायेषु २७ । रूपिष्ववधेः २८ । तदनंतभागे मनःपर्यायस्य २९ । सर्वद्रव्यपर्यायेषु केवलस्य ३० । एकादीनि भाज्यानि युगपदेकस्मिन्नाचतुर्भ्यः ३१ । मतिश्रुतावधयो (मतिश्रुताविभंगा) विपर्ययश्च ३२ । सदसतोरविशेषाद्यदृच्छोपलब्धेरुन्मत्तवत् ३३ । नैगमसंग्रहव्यवहारर्जुसूत्रशब्दा नयाः ३४ । आद्यशब्दौ द्वित्रिभेदौ ३५ ॥

। इति प्रथमोऽध्यायः ।

। अथ द्वितीयोऽध्यायः ।

औपशमिकक्षायिकौ भावौ मिश्रश्च जीवस्य स्वतत्वमौदयिकपारिणामिकौ च १ । द्विनवाष्टादशैकविंशतित्रिभेदा यथाक्रमम् २ । सम्यक्त्वचारित्रे ३ । ज्ञानदर्शनदानलाभभोगोपभोगवीर्याणि च ४ । ज्ञानाज्ञानदर्शनदानादिलब्धयश्चतुस्त्रित्रिपंचभेदाः सम्यक्त्वचारित्रसंयमासंयमाश्च ५ । गतिकषायलिंगमिथ्यादर्शनाज्ञानासंयतासिद्धलेश्याश्चतुश्चतुस्त्र्येकैकैकैकषड्भेदाः ६ । जीवभव्याभव्यत्वादीनि च ७ । उपयोगो लक्षणम् ८ । सद्विविधोऽष्टचतुर्भेद. ९ । संसारिणो मुक्ताश्च १० । समनस्का अमनस्काः ११ । संसारिणस्त्रसस्थावराः १२ । पृथिव्यप्तेजोवायुवनस्पतयः स्थावराः १३ । तेजोवायुर्द्वीन्द्रियादयश्च त्रसाः १४ । पचेंद्रियाणि १५ । द्विविधानि १६ । निर्वृत्युपकरणे द्रव्येंद्रियम् १७ । लब्ध्युपयोगौ भावेंद्रियम् १८ । उपयोगः स्पर्शादिषु १९ । स्पर्शनरसनघ्राणचक्षुःश्रोत्राणि २० । स्पर्शरसगंधरूपशब्दास्तेषामर्थः २१ । श्रुतमनिंद्रियस्यार्थः २२ । वाय्वंतानामे-

कम् २३ । कृमिपिपीलिकाभ्रमरमनुष्यादीनामेकैकवृद्धानि २४ । संज्ञिनः स-
मनस्काः २५ । विग्रहगतौ कर्मयोगः २६ । अनुश्रेणिगतिः २७ । अविग्रहाजी
वस्य २८ । विग्रहवती च संसारिणः प्राक्चतुर्भ्यः २९ । एकसमयोऽविग्रहः
३० । एकं द्वौ चानाहारकः ३१ । संमूर्छनगर्भोपपाताजन्म ३२ । सचित्तशीत-
संवृत्ताः सेतरामिश्राश्चैकशस्तद्योनयः ३३ । जराय्वंडपोतजानां गर्भः ३४ । ना-
रकदेवानामुपपातः ३५ । शेषाणां संमूर्छनम् ३६ । औदारिकवैक्रियाहारकतै-
जसकार्मणानि शरीराणि ३७ । परंपरं सूक्ष्मम् ३८ । प्रदेशतोऽसंख्येयगुणं
प्राक्तैजसात् ३९ । अनंतगुणे परे ४० । अप्रतिघाते ४१ । अनादिसंबंधे ४२ ।
सर्वस्य ४३ । तदादीनि भाज्यानि युगपदेकस्याचतुर्भ्यः ४४। निरूपभोगमंत्यम्
४५ । गर्भसंमूर्छनमाद्यम् ४६ । वैक्रियमौपपातिकम् ४७ । लब्धिप्रत्ययं च ४८।
शुभं विशुद्धमव्याघाति चाहारकं चतुर्दशपूर्वधरस्यैव ४९ । तैजसमपि ५० ।
नारकसंमूर्छिनो नपुंसकानि ५१ । न देवाः ५२ । औपपातिकचरमदेहोत्तमपु-

रुपासंख्येयवर्षायुषोऽनपवर्त्यायुषः ५१ ॥

। इति द्वितीयोऽध्यायः ।

---

॥ अथ तृतीयोऽध्यायः ॥

रत्नशर्करावालुकापंकधूमतमोमहातमःप्रभाभूमयोघनांबुवाताकाशप्रतिष्ठाः सप्ताधोऽधः पृथुतराः १ । तासु नारकाः २ । नित्याशुभतरलेश्यापरिणामदेहवेदनाविक्रिया. ३ । परस्परोदीरितदुःखा. ४ । संक्लिष्टासुरोदीरितदुःखाश्च प्राक्-चतुर्थ्या. ५ । तेष्वेकत्रिसप्तदशसप्तदशद्वाविंशतित्रयस्त्रिंशत्सागरोपमा सत्वानां परा स्थितिः ६ । जंबूद्वीपलवणादयः शुभनामानो द्वीपसमुद्राः ७ । द्विर्द्विर्विष्कम्भा. पूर्वपरिक्षेपिणो वलयाकृतय. ८ । तन्मध्ये मेरुनाभिर्वृत्तो योजनशतसहस्रविष्कंभो जंबूद्वीपः ९ । तत्रभरतहैमवतहरिविदेहरम्यकहैरण्यवतैरावतवर्षाः क्षेत्राणि १० । तद्विभाजिनः पूर्वापरायताहिमवन्महाहिमवन्निषधनीलरु-

क्मिशिखरिणो वर्षधरपर्वताः ११ । द्विर्धातकीखण्डे १२ । पुष्करार्धे च १३ ।
प्राङ्मानुषोत्तरान्मनुष्याः १४ । आर्याम्लिशश्च १५ । भरतैरावतविदेहाः कर्म-
भूमयोऽन्यत्र देवकुरूत्तरकुरुभ्यः १६ । नृस्थिती परापरे त्रिपल्योपमांतर्मुहूर्ते
१७ । तिर्यग्योनीनां च १८ ॥

॥ इति तृतीयोऽध्यायः ॥

---

॥ अथ चतुर्थोऽध्यायः ॥

देवाश्चतुर्निकायाः १ । तृतीयः पीतलेश्यः २ । दशाष्टपंचद्वादशविकल्पाः
कल्पोपपन्नपर्यन्ताः ३ । इंद्रसामानिकत्रायस्त्रिंशपारिषद्यात्मरक्षलोकपालानी-
कप्रकीर्णकाभियोग्यकिल्बिषिकाश्चैकशः ४। त्रायस्त्रिंशलोकपालवर्ज्या व्यंतरज्यो-
तिष्काः ५ । पूर्वयोर्द्वींद्राः ६ । पीतांतलेश्याः ७ । कायप्रवीचारा आऐशानात्
८ । शेषाःस्पर्शरूपशब्दमनःप्रवीचाराद्वयोर्द्वयोः ९ । परेऽप्रवीचाराः १० । भ-

भवनवासिनोऽसुरनागविद्युत्सुपर्णाग्निवातस्तनितोदधिद्वीपदिक्कुमाराः ११ । व्यंतर-
राः किंनरकिंपुरुषमहोरगगांधर्वयक्षराक्षसभूतपिशाचाः १२ । ज्योतिष्काः सू-
र्याचंद्रमसौग्रहनक्षत्रप्रकीर्णतारकाश्च १३ । मेरुप्रदक्षिणानित्यगतयो नृलोके
१४ । तत्कृतः कालविभागः १५ । बहिरवस्थिताः १६ । वैमानिकाः १७ । क-
ल्पोपपन्नाः कल्पातीताश्च १८ । उपर्युपरि १९ । सौधर्मैशानसनत्कुमारमाहें-
द्रब्रह्मलोकलांतकमहाशुक्रसहस्रारेष्वानतप्राणतयोरारणाच्युतयोर्नवसुग्रैवेयकेषु
विजयवैजयंतजयंतापराजितेषु सर्वार्थसिद्धे च २० । स्थितिप्रभावसुखद्युतिले-
श्याविशुद्धींद्रियावधिविषयतोऽधिकाः २१ । गतिशरीरपरिग्रहाभिमानतो हीनाः
२२ । उच्छ्वासाहारवेदनोपपातानुभावतश्च साध्याः २३ । पीतपद्मशुक्ललेश्या
द्वित्रिशेषेषु २४ । प्राग्ग्रैवेयकेभ्यः कल्पाः २५ । ब्रह्मलोकालया लौकांतिकाः
२६ । सारस्वतादित्यवन्ह्यरुणगर्दतोयतुषिताव्याबाधामरुतः २७ । विजयादिषु
द्विचरमाः २८ । औपपातिकमनुष्येभ्यः शेषास्तिर्यग्योनयः २९ । स्थितिः ३० ।

भवनेषु दक्षिणार्धाधिपतीनां पल्योपममध्यर्धम् ३१। शेषाणां पादोने ३२। असुरेन्द्रयोः सागरोपममधिकम् ३३। सौधर्मादिषु यथाक्रमम् ३४। सागरोपमे ३५। अधिके च ३६। सप्तसनत्कुमारे ३७। विशेषत्रिसप्तदशैकादशत्रयोदशपंचदशभिरधिकानि च ३८। आरणाच्युतादूर्ध्वमेकैकेन नवसुग्रैवेयकेषु विजयादिषु सर्वार्थसिद्धे च ३९। अपरापल्योपममधिकं च ४०। सागरोपमे ४१। अधिके च ४२। परतः परतः पूर्वापूर्वानंतरा ४३। नारकाणां च द्वितीयादिषु ४४। दशवर्षसहस्राणि प्रथमायाम् ४५। भवनेषु च ४६। व्यंतराणां च ४७। परापल्योपमम् ४८। ज्योतिष्काणामधिकम् ४९। ग्रहाणामेकम् ५०। नक्षत्राणामर्धम् ५१। तारकाणांचतुर्भागः ५२। जघन्यात्वष्टभागः ५३। चतुर्भागः शेषाणाम् ५४॥

॥ इति चतुर्थोऽध्यायः ॥

॥ अथ पञ्चमोऽध्यायः ॥

अजीवकाया धर्माधर्माकाशपुद्गलाः १ । द्रव्याणि जीवाश्च २ । नित्यावस्थितान्यरूपीणि ३ । रूपिणः पुद्गलाः ४ । आकाशादेकद्रव्याणि ५ । निष्क्रियाणि च ६ । असंख्येयाः प्रदेशा धर्माधर्मयोः ७ । जीवस्य च ८ । आकाशस्यानन्ताः ९ । संख्येयासंख्येयाश्च पुद्गलानाम् १० । नाणोः ११ । लोकाकाशेऽवगाहः १२ । धर्माधर्मयोः कृत्स्ने १३ । एकप्रदेशादिषु भाज्यः पुद्गलानाम् १४ । असंख्येयभागादिषु जीवानाम् १५ । प्रदेशसंहारविसर्गाभ्यां प्रदीपवत् १६ । गतिस्थित्युपग्रहो धर्माधर्मयोरुपकारः १७ । आकाशस्यावगाहः १८ । शरीरवाङ्मनःप्राणापानाः पुद्गलानाम् १९ । सुखदुःखजीवितमरणोपग्रहाश्च २० । परस्परोपग्रहो जीवानाम् २१ । वर्त्तनापरिणामः क्रियापरत्वापरत्वे च कालस्य २२ । स्पर्शरसगंधवर्णवंतः पुद्गलाः २३ । शब्दबंधसौक्ष्म्यस्थौल्यसंस्थानभेदतमश्छायातपोद्योतवन्तश्च २४ । अणवः स्कंधाश्च २५ । संघातभेदेभ्य उत्प-

द्यंते २६ । भेदादणुः २७ । भेदसंघाताभ्यां चाक्षुषाः २८ । उत्पादव्ययध्रौव्ययुक्तं सत् २९ । तद्भावाव्ययं नित्यम् ३० । अर्पितानर्पितसिद्धेः ३१ । स्निग्धरूक्षत्वाद्बंधः ३२ । न जघन्यगुणानाम् ३३ । गुणसाम्ये सदृशानाम् ३४ । द्व्यधिकादिगुणानां तु ३५ । बंधे समाधिकौ पारिणामिकौ ३६ । गुणपर्ययवद्द्रव्यम् ३७ । कालश्चेत्येके ३८ । सोऽनंतसमयः ३९ । द्रव्याश्रया निर्गुणा गुणाः ४० । तद्भावः परिणामः ४१ । अनादिरादिमाँश्च ४२ । रूपिष्वादिमान् ४३ । योगोपयोगौ जीवेषु ४४ ।

। इति पञ्चमोऽध्यायः ।

॥ ५ ॥

---

अथ षष्ठोऽध्यायः

कायवाङ्मनःकर्म योगः १ । स आश्रवः २ । शुभः पुण्यस्य ३ । अशुभः पापस्य । (शेषंपापम्) ४ । स कषायाकषाययोः सांपरायिकेर्यापथ-

योः ५। इंद्रियकषायाव्रतक्रियाः पंचचतुःपंचपंचविंशतिसंख्याः पूर्वस्य भेदाः ६। तीव्रमंदज्ञाताज्ञातभाववीर्याधिकरणविशेषेभ्यस्तद्विशेषः (विशेषात्तद्विशेषः) ७। अधिकरणं जीवाजीवाः ८। आद्यं संरंभसमारंभारंभयोगकृतकारितानुमतिकषायविशेषैस्त्रिस्त्रिस्त्रिश्चतुश्चैकशः ९। निर्वर्त्तनानिक्षेपसंयोगनिसर्गा द्विचतुर्द्वित्रिभेदाः परं १०। तत्प्रदोषनिन्हवमात्सर्यांतरायासादनोपघाता ज्ञानदर्शनावरणयोः ११। दुःखशोकतापाक्रंदनवधपरिदेवनान्यात्मपरोभयस्थान्यसद्वेद्यस्य १२। भूतव्रत्यनुकंपादानसरागसंयमादियोगक्षांतिशौचमिति सद्वेद्यस्य १३। केवलिश्रुतसंघधर्मदेवावर्णवादो दर्शनमोहस्य १४। कषायोदयात्तीव्रात्मपरिणामश्चारित्रमोहस्य १५। वह्वारंभपरिग्रहत्वं च नारकस्यायुषः १६। माया तैर्यग्योनस्य १७। अल्पारंभपरिग्रहत्वं स्वभावमार्दवार्जवत्वं च मानुषस्य १८। निःशीलव्रतत्वं च सर्वेषां १९। सरागसंयमसंयमासंयमाकामनिर्जराबालतपांसि देवस्य २०। योगवक्रताविसंवादनं चाशुभस्य नाम्नः २१। विप-

रीतं शुभस्य २२। दर्शनविशुद्धिर्विनयसंपन्नताशीलव्रतेष्वनतिचारोऽभीक्ष्णं
ज्ञानोपयोगसंवेगौशक्तितस्त्यागतपसीसंघसाधुसमाधिर्वैयावृत्यकरणमर्हदाचा-
र्यबहुश्रुतप्रवचनभक्तिरावश्यकापरिहाणिर्मार्गप्रभावना प्रवचनवत्सलत्वमिति
तीर्थकृत्त्वस्य २३। परात्मनिंदाप्रशंसेसदसद्गुणाच्छादनोद्भावने च नीचैर्गोत्रस्य
२४। तद्विपर्ययो नीचैर्वृत्त्यनुत्सेकौ चोत्तरस्य २५। विघ्नकरणमंतरायस्य २६।

। इति षष्ठोऽध्यायः।

। अथ सप्तमोऽध्यायः।

हिंसानृतस्तेयाब्रह्मपरिग्रहेभ्यो विरतिर्व्रतम् १। देशसर्वतोऽणुमहती
२। तत्स्थैर्यार्थं भावनाः पंच पंच ३। हिंसादिष्विहामुत्रचापायावद्यदर्शनम्
४। दुःखमेववा ५। मैत्रीप्रमोदकारुण्यमाध्यस्थ्यानि सत्त्वगुणाधिकक्लिश्य-
मानाविनेयेषु ६। जगत्कायस्वभावौ च संवेगवैराग्यार्थम् ७। प्रमत्तयोगा-

त्प्राणव्यपरोपणं हिंसा ८। असदभिधानमनृतम् ९। अदत्तादानं स्तेयम् १०। मैथुनमब्रह्म ११। मूर्छा परिग्रहः १२। निःशल्यो व्रती १३। अगार्यनगारश्च १४। अणुव्रतोऽगारी १५। दिग्देशानर्थदण्डविरतिसामायिकप्रोषधोपवासोपभोगपरिभोगपरिमाणातिथिसंविभागव्रतसंपन्नश्च १६। मारणांतिकीं संलेखनां जोषिता १७। शंकाकांक्षाविचिकित्सान्यदृष्टिप्रशंसासंस्तवाः सम्यग्दृष्टेरतिचाराः १८। व्रतशीलेषु पंच पंच यथाक्रमम् १९। बधबन्धच्छेदातिभारारोपणान्नपाननिरोधाः २०। मिथ्योपदेशरहस्याभ्याख्यानकूटलेखक्रियान्यासापहारसाकारमंत्रभेदाः २१। स्तेनप्रयोगतदाहृतादानविरुद्धराज्यातिक्रमहीनाधिकमानोन्मानप्रतिरूपकव्यवहाराः २२। परविवाहकरणेत्वरपरिगृहीतागमनानंगक्रीडातीव्रकामाभिनिवेशाः २३। क्षेत्रवास्तुहिरण्यसुवर्णधनधान्यदासीदासकुप्यप्रमाणातिक्रमाः २४। ऊर्ध्वाधस्तिर्यग्व्यतिक्रमः क्षेत्रवृद्धिस्मृत्यंतराधानानि २५। आनयनप्रेष्यप्रयोगशब्दरूपानुपातपुद्गलप्रक्षेपाः २६। कन्दर्पकौ-

कुत्कुच्यमौखर्यासमीक्ष्याधिकरणोपभोगाधिकत्वानि २७। योगदुःप्रणिधानानादर-
स्मृत्यनुपस्थापनानि २८ । अप्रत्यवेक्षिताप्रमार्जितोत्सर्गादाननिक्षेपसंस्तारोप-
क्रमणानादरस्मृत्यनुपस्थानानि २९। सचित्तसंबद्धसंमिश्राभिषवदुःपक्वाहाराः
३० । सचित्तनिक्षेपपिधानपरव्यपदेशमात्सर्यकालातिक्रमाः ३१ । जीवितमर-
णाशंसामित्रानुरागसुखानुबंधनिदानकरणानि ३२ । अनुग्रहार्थं स्वस्यातिस-
र्गो दानम् ३३। विधिद्रव्यदातृपात्रविशेषात्तद्विशेषः ३४ ।

। इति सप्तमोऽध्यायः ।

---

। अथ अष्टमोऽध्यायः ।

मिथ्यादर्शनाविरतिप्रमादकषाययोगा बंधहेतवः १। सकषायत्वाज्जीवः क-
र्मणो योग्यान्पुद्गलानादत्ते २ । सबंधः ३। प्रकृतिस्थित्यनुभावप्रदेशास्तद्विधयः
४ । आद्यो ज्ञानदर्शनावरणवेदनीयमोहनीयायुष्कनामगोत्रांतरायाः ५ । पंच

नवद्व्यष्टाविंशतिचतुर्द्विचत्वारिंशद्द्विपंचभेदा यथाक्रमम् ६। मत्यादीनां ७।
चक्षुरचक्षुरवधिकेवलानां निद्रानिद्रानिद्राप्रचलाप्रचलाप्रचलास्त्यानगृद्धिवेदनी
यानि च ८। सदसद्वेद्ये ९। दर्शनचारित्रमोहनीयकषायनोकषायवेदनीया-
ख्यास्त्रिद्विषोडशनवभेदाः सम्यक्त्वमिथ्यात्वतदुभयानि कषायनोकषायावनं-
तानुवंध्यप्रत्याख्यानप्रत्याख्यानावरणसंज्वलनविकल्पाश्चैकशः क्रोधमानमा-
यालोभाः हास्यरत्यरतिशोकभयजुगुप्सास्त्रीपुंनपुंसकवेदा १० । नारकतै-
र्यग्योनमानुषदैवानि ११। गतिजातिशरीरांगोपांगनिर्माणबंधनसंघातसंस्था-
नसंहननस्पर्शरसगंधवर्णानुपूर्व्यगुरुलघूपघातपराघातातपोद्योतोच्छ्वासविहायो-
गतयः प्रत्येकशरीरत्रससुभगसुस्वरशुभसूक्ष्मपर्याप्तिस्थिरादेययशांसिसेतराणि-
तीर्थकृत्त्वचेति १२ । उच्चैर्नीचैश्च १३ । दानादीनामंतरायः १४ । आदित-
स्तिसृणां ( अंतरायस्य ) च त्रिंशत्सागरोपमकोटीकोट्यः परा स्थितिः १५।
सप्ततिर्मोहनीयस्य १६। नामगोत्रयोर्विंशतिः १७। त्रयस्त्रिंशत्सागरोपमा-

ण्यायुष्कस्य ( त्रयस्त्रिंशत्सागराण्यधिकान्यायुष्कस्य ) १८ । अपराद्वादशमुहूर्त्तावेदनीयस्य १९ । नामगोत्रयोरष्टौ २० । शेषाणामंतर्मुहूर्त्तम् २१ । विपाकोऽनुभावः २२ । स यथा नाम २३। ततश्च निर्जरा २४। नामप्रत्ययाः सर्वतोयोगविशेषात्सूक्ष्मैकक्षेत्रावगाढस्थिताः सर्वात्मप्रदेशेष्वनंतानंतप्रदेशाः २५। सद्वेद्यसम्यक्त्वहास्यरतिपुरुषवेदशुभायुर्नामगोत्राणि पुण्यम् २६ ।

। इति अष्टमोऽध्यायः ।

॥ अथ नवमोऽध्यायः ॥

आश्रवनिरोधः संवरः १ । सगुप्तिसमितिधर्मानुप्रेक्षापरिषहजयचारित्रैः २ । तपसा निर्जरा च ३ । सम्यग्योगनिग्रहो गुप्तिः ४ । ईर्याभाषैषणादाननिक्षेपोत्सर्गाः समितयः ५ । उत्तमःक्षमामार्दवार्जवशौचसत्यसंयमतपस्त्यागाकिंचन्यब्रह्मचर्याणि धर्मः ६ । अनित्याशरणसंसारैकत्वान्यत्वाशुचित्वाश्रवसंव-

रनिर्जरालोकबोधिदुर्लभधर्मस्वतत्त्वानुचिंतनमनुप्रेक्षाः ७। मार्गाच्यवननिर्ज-
रार्थं परिषोढव्याः परिषहाः ८। क्षुत्पिपासाशीतोष्णदंशमशकनाग्न्यारतिस्त्री-
चर्यानिषद्याशय्याक्रोशवधयाचनालाभरोगतृणस्पर्शमलसत्कारपुरस्कारप्रज्ञाज्ञा
नादर्शनानि ९। सूक्ष्मसंपरायछद्मस्थवीतरागयोश्चतुर्दश १०। एकादश जिने
११। बादरसंपराये सर्वे १२। ज्ञानावरणे प्रज्ञाज्ञाने १३। दर्शनमोहांतराय-
योरदर्शनालाभौ १४। चारित्रमोहेनाग्न्यारतिस्त्रीनिषद्याक्रोशयाचनासत्कारपु-
रस्काराः १५। वेदनीये शेषाः १६। एकादयो भाज्या युगपदेकोनविंशतेः १७।
सामायिकछेदोपस्थाप्यपरिहारविशुद्धिसूक्ष्मसंपराययथाख्यातानि चारित्रम् १८।
अनशनावमौदर्यवृत्तिपरिसंख्यानरसपरित्यागविविक्तशय्यासनकायक्लेशा बा-
ह्यंतपः १९। प्रायश्चित्तविनयवैयावृत्त्यस्वाध्यायव्युत्सर्गध्यानान्युत्तरम् २०। नवच-
तुर्दशपंचद्विभेदं यथाक्रमं प्राग्ध्यानात् २१। आलोचनप्रतिक्रमणतदुभयविवे-
कव्युत्सर्गतपश्छेदपरिहारोपस्थापनानि २२। ज्ञानदर्शनचारित्रोपचाराः २३। आ-

वाचना- चार्योपाध्यायतपस्विशिक्षकग्लानकुलगणसंघसाधुमनोज्ञानाम् २४। वाचना-
पृच्छनानुप्रेक्षाम्नायधर्मोपदेशाः २५। बाह्याभ्यंतरोपध्योः २६। उत्तमसंहनन-
स्यैकाग्रचिंतानिरोधश्चध्यानम् २७। आमुहूर्त्तात् २८। आर्त्तरौद्रधर्म्यशुक्लानि
२९। परे मोक्षहेतू ३०। आर्त्तममनोज्ञानां संप्रयोगे तद्विप्रयोगायस्मृति-
समन्वाहारः ३१। वेदनायाश्च ३२ विपरीतं मनोज्ञानाम् ३३। निदानं च का-
मोपहतचित्तानां पुनः ३४। तदविरतदेशविरतप्रमत्तसंयतानाम् ३५। हिंसा-
नृतस्तेयविषयसंरक्षणेभ्यो रौद्रमविरतदेशविरतयोः ३६। आज्ञापायविपाकसं-
स्थानविचयायधर्म्यमप्रमत्तसंयतस्य ३७। उपशांतक्षीणकषाययोश्च ३८। शु-
क्ले चाद्ये ३९।(शुक्लेचाद्ये पूर्वविदः ए.३९।) पूर्वविदः ४०। परे केवलिनः ४१।
पृथक्त्ववितर्कैकत्वसूक्ष्मक्रियाप्रतिपातिव्युपरतक्रियानिवृतीनि ४२। तत्र्यकका-
ययोगायोगानाम् ४३। एकाश्रयेसवितर्कें पूर्वे ४४। अविचारं द्वितीयम् ४५।
वितर्कः श्रुतम् ४६। विचारोऽर्थव्यंजनयोर्योगसंक्रांतिः ४७। सम्यग्दृष्टिश्रा-

यकविरतानंतवियोजकदर्शनमोहक्षपकोपशमकोपशांतमोहक्षपकक्षीणमोहजि-
नाः क्रमशोऽसंख्येयगुणनिर्जराः ४८। पुलाकबकुशकुशीलनिर्ग्रंथस्नातका
निर्ग्रंथाः ४९। संयमश्रुतप्रतिसेवनातीर्थलिंगलेश्योपपातस्थानविकल्पतः सा-
ध्याः ५०।

॥ इति नवमोऽध्यायः ॥

। अथ दशमोऽध्यायः ।

मोहक्षयाज्ज्ञानदर्शनावरणांतरायक्षयाच्च केवलम् १। बंधहेत्वभावनिर्ज-
राभ्याम् २। कृत्स्नकर्मक्षयो मोक्षः ३। औपशमिकादिभव्यत्वाभावाच्चान्य-
त्रकेवलसम्यक्त्वज्ञानदर्शनसिद्धत्वेभ्यः ४। तदनंतरमूर्ध्वं गच्छत्यालोकांतात् ५।
पूर्वप्रयोगादसंगत्वाद्बंधच्छेदात्तथागतिपरिणामाच्च तद्गतिः ६। क्षेत्रकालगतिलिंग-
तीर्थचारित्रप्रत्येकबुद्धबोधितज्ञानावगाहनांतरसंख्याल्पबहुत्वतः साध्याः ७।

। इति दशमोऽध्यायः ।

॥इति अनूनापूर्वदशपूर्वरत्नरत्नाकरायमाणपंचशतप्रकरणोत्तुंग-
प्रासादसूत्रणसूत्रधारकल्पश्रीमदुमास्वात्याचार्यविरचिततत्त्वार्थसूत्रं
॥ समाप्तम् ॥